पद्मनाभं द्विजश्रेष्ठ तत्र मे कार्यमाहितम् ॥ ५
तस्य चाहमसांनिध्यं श्रुतवानस्मि तं गतम् ।
स्वजनं तं प्रतीक्षामि पर्जन्यमिव कर्षकः ॥ ६
तस्य चाक्लेशकरणं स्वस्तिकारसमाहितम् ।
वर्तयाम्ययुतं ब्रह्म योगयुक्तो निरामयः ॥ ७

नाग उवाच ।

अहो कल्याणवृत्तस्त्वं साधु सज्जनवत्सलः ।
अबाच्यस्त्वं महाभाग परं स्नेहेन पश्यसि ॥ ८
अहं स नागो विप्रर्षे यथा मां विन्दते भवान् ।
आज्ञापय यथा स्वैरं किं करोमि प्रियं तव ॥ ९
भवन्तं स्वजनादस्मि संप्राप्तं श्रुतवानिह ।
अतस्त्वां स्वयमेवाहं द्रष्टुमभ्यागतो द्विज ॥ १०
संप्राप्तश्च भवानद्य कृतार्थः प्रतियास्यति ।
विस्रब्धो मां द्विजश्रेष्ठ विषये योक्तुमर्हसि ॥ ११
वयं हि भवता सर्वे गुणक्रीता विशेषतः ।
यस्त्वमात्महितं त्यक्त्वा मामेवेहानुरुध्यसे ॥ १२

ब्राह्मण उवाच ।

आगतोऽहं महाभाग तव दर्शनलालसः ।
कंचिदर्थमनर्थज्ञः प्रष्टुकामो भुजंगम ॥ १३
अहमात्मानमात्मस्थो मार्गमाणोऽऽत्मनो हितम् ।
वासार्थिनं महाप्राज्ञ बलवन्तमुपास्मि ह ॥ १४
प्रकाशितस्त्वं स्वगुणैर्यशोगर्भगभस्तिभिः ।
शशाङ्ककरसंस्पर्शैर्हृद्यैरात्मप्रकाशितैः ॥ १५
तस्य मे प्रश्नमुत्पन्नं छिन्धि त्वमनिलाशन ।
पश्चात्कार्यं वदिष्यामि श्रोतुमर्हति मे भवान् ॥ १६

इति श्रीमहाभारते शान्तिपर्वणि
एकोनपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३४९ ॥

३५०

ब्राह्मण उवाच ।

विवस्वतो गच्छति पर्ययेण
वोढुं भवांस्तं रथमेकचक्रम् ।
आश्चर्यभूतं यदि तत्र किंचि-
द्दृष्टं त्वया शंसितुमर्हसि त्वम् ॥ १

नाग उवाच ।

यस्य रश्मिसहस्रेषु शाखास्विव विहंगमाः ।
वसन्त्याश्रित्य मुनयः संसिद्धा दैवतैः सह ॥ २
यतो वायुर्विनिःसृत्य सूर्यरश्म्याश्रितो महान् ।
विजृम्भत्यम्बरे विप्र किमाश्चर्यतरं ततः ॥ ३
शुक्रो नामासितः पादो यस्य वारिधरोऽम्बरे ।
तोयं सृजति वर्षासु किमाश्चर्यमतः परम् ॥ ४
योऽष्टमासांस्तु शुचिना किरणेनोज्झितं पयः ।
पर्यादत्ते पुनः काले किमाश्चर्यमतः परम् ॥ ५
यस्य तेजोविशेषेषु नित्यमात्मा प्रतिष्ठितः ।
यतो बीजं मही चेयं धार्यते सचराचरम् ॥ ६
यत्र देवो महाबाहुः शाश्वतः परमोऽक्षरः ।
अनादिनिधनो विप्र किमाश्चर्यमतः परम् ॥ ७
आश्चर्याणामिवाश्चर्यमिदमेकं तु मे शृणु ।
विमले यन्मया दृष्टमम्बरे सूर्यसंश्रयात् ॥ ८
पुरा मध्याह्नसमये लोकांस्तपति भास्करे ।
प्रत्यादित्यप्रतीकाशः सर्वतः प्रत्यदृश्यत ॥ ९
स लोकांस्तेजसा सर्वान्स्वभासा निर्विभासयन् ।
आदित्याभिमुखोऽभ्येति गगनं पाटयन्निव ॥ १०
हुताहुतिरिव ज्योतिर्व्याप्य तेजोमरीचिभिः ।
अनिर्देश्येन रूपेण द्वितीय इव भास्करः ॥ ११
तस्याभिगमनप्राप्तौ हस्तो दत्तो विवस्वता ।
तेनापि दक्षिणो हस्तो दत्तः प्रत्यर्चनार्थिना ॥ १२

ततो भित्त्वैव गगनं प्रविष्टो रविमण्डलम् ।
एकीभूतं च तत्तेजः क्षणेनादित्यतां गतम् ॥ १३
तत्र नः संशयो जातस्तयोस्तेजःसमागमे ।
अनयोः को भवेत्सूर्यो रथस्थो योऽयमागतः ॥ १४
ते वयं जातसंदेहाः पर्यपृच्छामहे रविम् ।
क एष दिवमाक्रम्य गतः सूर्य इवापरः ॥ १५

इति श्रीमहाभारते शान्तिपर्वणि
पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५० ॥

३५१

सूर्य उवाच ।

नैष देवोऽनिलसखो नासुरो न च पन्नगः ।
उञ्छवृत्तिव्रते सिद्धो मुनिरेष दिवं गतः ॥ १
एष मूलफलाहारः शीर्णपर्णाशनस्तथा ।
अब्भक्षो वायुभक्षश्च आसीद्विप्रः समाहितः ॥ २
ऋचश्चानेन विप्रेण संहितान्तरभिष्टुताः ।
स्वर्गद्वारकृतोद्योगो येनासौ त्रिदिवं गतः ॥ ३
असन्नधीरनाकाङ्क्षी नित्यमुञ्छशिलाशनः ।
सर्वभूतहिते युक्त एष विप्रो भुजंगम ॥ ४
न हि देवा न गन्धर्वा नासुरा न च पन्नगाः ।
प्रभवन्तीह भूतानां प्राप्तानां परमां गतिम् ॥ ५

नाग उवाच ।

एतदेवंविधं दृष्टमाश्चर्यं तत्र मे द्विज ।
संसिद्धो मानुषः कायो योऽसौ सिद्धगतिं गतः ।
सूर्येण सहितो ब्रह्मन्पृथिवीं परिवर्तते ॥ ६

इति श्रीमहाभारते शान्तिपर्वणि
एकपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५१ ॥

३५२

ब्राह्मण उवाच ।

आश्चर्यं नात्र संदेहः सुप्रीतोऽस्मि भुजंगम ।
अन्वर्थोपगतैर्वाक्यैः पन्थानं चास्मि दर्शितः ॥ १
स्वस्ति तेऽस्तु गमिष्यामि साधो भुजगसत्तम ।
स्मरणीयोऽस्मि भवता संप्रेषणनियोजनैः ॥ २

नाग उवाच ।

अनुक्त्वा मद्गतं कार्यं केदानीं प्रस्थितो भवान् ।
उच्यतां द्विज यत्कार्यं यदर्थं त्वमिहागतः ॥ ३
उक्तानुक्ते कृते कार्ये मामामन्त्र्य द्विजर्षभ ।
मया प्रत्यभ्यनुज्ञातस्ततो यास्यसि ब्राह्मण ॥ ४
न हि मां केवलं दृष्ट्वा त्यक्त्वा प्रणयवानिह ।
गन्तुमर्हसि विप्रर्षे वृक्षमूलगतो यथा ॥ ५
त्वयि चाहं द्विजश्रेष्ठ भवान्मयि न संशयः ।
लोकोऽयं भवतः सर्वः का चिन्ता मयि तेऽनघ ॥

ब्राह्मण उवाच ।

एवमेतन्महाप्राज्ञ विज्ञातार्थ भुजंगम ।
नातिरिक्तास्त्वया देवाः सर्वथैव यथातथम् ॥ ७
य एवाहं स एव त्वमेवमेतद्भुजंगम ।
अहं भवांश्च भूतानि सर्वे सर्वत्रगाः सदा ॥ ८
आसीत्तु मे भोगपते संशयः पुण्यसंचये ।
सोऽहमुञ्छव्रतं साधो चरिष्याम्यर्थदर्शनम् ॥ ९
एष मे निश्चयः साधो कृतः कारणवत्तरः ।
आमन्त्रयामि भद्रं ते कृतार्थोऽस्मि भुजंगम ॥ १०

इति श्रीमहाभारते शान्तिपर्वणि
द्विपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५२ ॥

३५३

भीष्म उवाच ।

स चामन्त्र्योरगश्रेष्ठं ब्राह्मणः कृतनिश्चयः ।
दीक्षाकाङ्क्षी तदा राजंश्च्यवनं भार्गवं श्रितः ॥ १
स तेन कृतसंस्कारो धर्ममेवोपतस्थिवान् ।
तथैव च कथामेतां राजन्कथितवांस्तदा ॥ २
भार्गवेणापि राजेन्द्र जनकस्य निवेशने ।

कथैषा कथिता पुण्या नारदाय महात्मने ॥ ३
नारदेनापि राजेन्द्र देवेन्द्रस्य निवेशने ।
कथिता भरतश्रेष्ठ पृष्टेनाक्लिष्टकर्मणा ॥ ४
देवराजेन च पुरा कथैषा कथिता शुभा ।
समस्तेभ्यः प्रशस्तेभ्यो वसुभ्यो वसुधाधिप ॥ ५
यदा च मम रामेण युद्धमासीत्सुदारुणम् ।
वसुभिश्च तदा राजन्कथेयं कथिता मम ॥ ६
पृच्छमानाय तत्त्वेन मया तुभ्यं विशां पते ।
कथेयं कथिता पुण्या धर्म्या धर्मभृतां वर ॥ ७
तदेष परमो धर्मो यन्मां पृच्छसि भारत ।
असन्नधीरनाकाङ्क्षी धर्मार्थकरणे नृप ॥ ८
स च किल कृतनिश्चयो द्विजाग्र्यो
भुजगपतिप्रतिदेशितार्थकृत्यः ।
यमनियमसमाहितो वनान्तं
परिगणितोञ्छशिलाशनः प्रविष्टः ॥ ९

इति श्रीमहाभारते शान्तिपर्वणि
त्रिपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५३ ॥
॥ समाप्तं मोक्षधर्मपर्व ॥

॥ समाप्तं शान्तिपर्व ॥